**राजा**—

अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते सीकरक्लिन्ननेमिः ॥ ७ ॥

**मातलिः**—क्षणादायुष्मान्स्वाधिकारभूमौ वर्तिष्यते ।

**राजा**—( अधोऽवलोक्य ) वेगावतरणादाश्चर्यदर्शनः संलक्ष्यते मनुष्यलोकः । तथाहि—

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णाभ्यन्तरलीनतां विजहाति स्कन्धोदयात्पादपाः ।
संतानैस्तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥ ८ ॥

—शाकुन्तले सप्तमोऽङ्कः ।

---

Description of the East just before the Moonrise.

**विदूषकः**—( निरूप्य ) प्रत्यासन्नेन चन्द्रोदयेन भवितव्यम् । यथा तिमिरेणातिरिच्यमानं पूर्वदिशामुखमालोहितप्रभं दृश्यते ।

**राजा**—सम्यग्भवान्मन्यते ।

उदयगूढशशाङ्कमरीचिभि-
स्तमसि दूरतरं प्रतिसारिते ।
अलकसंयमनादिव लोचने
हरति मे हरिवाहनदिङ्मुखम् ॥ ९ ॥

—विक्रमोर्वशीये तृतीयोऽङ्कः ।

---

### Salutation to the full bright Moon by King Vikrama.

**राजा**—( सस्मितम् ) सर्वत्रौदरिकस्याभ्यवहार्यमेव विषयः ॥ ( प्राञ्जलिः प्रणम्य ) भगवन् ऋक्षराज.

गविमाविशते सतां क्रियायै
सुधया तर्पयते पितॄन्सुरांश्च ।
तमसां निशि मूर्च्छतां निहन्त्रे
हरचूडानिहितात्मने नमस्ते ॥ ७ ॥

—विक्रमोर्वशीये तृतीयोऽङ्कः ।

---

### Benefits from Hunting.

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः ।
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ ९ ॥

—शाकुन्तले द्वितीयोऽङ्कः ।

---

### Description of the Dawn.

**शिष्यः**—वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासादुपावृत्तेन काश्यपेन । प्रकाशं निर्गतस्तावदवलोकयामि कियदवशिष्टं रजन्या इति । ( परिक्रम्यावलोक्य च ) हन्त प्रभातम् । तथा हि—

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतोऽरुणपुरःसर एकतोऽर्कः ।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ॥ १ ॥

अपि च ।

अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्रसुदुःसहानि ॥ २ ॥

—शाकुन्तले चतुर्थोऽङ्कः ।

---

## मेघवर्णनम् ।

Description of the Cloud and Poet's conception of converting it as a carrier of his message to his beloved.

कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येण भर्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ १ ॥

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान्कनकवलयभ्रंशरिक्तप्रकोष्ठः ।
आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥ २ ॥

तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतो-
रन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ ।
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥ ३ ॥

प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी
जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृत्तिम् ।

स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥ ४ ॥

धूमज्योतिः सलिलमरुतां संनिपातः क्व मेघः
संदेशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्ता हि प्रणयकृपणाश्चेतनाचेतनेषु ॥ ५ ॥

जातं वंशे भुवनविदिते पुष्करावर्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।
तेनार्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहं
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ ६ ॥

संतप्तानां त्वमसि शरणं तत्पयोद प्रियायाः
संदेशं मे हर धनपतिक्रोधविश्लेषितस्य ।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥ ७ ॥

त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसन्त्यः ।
कः संनद्धे विरहविधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥ ८ ॥

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां
वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।
गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥ ९ ॥

तां चावश्यं दिवसगणनातत्परामेकपत्नी-
मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ।
आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥ १० ॥

कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्यां
तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः ।
आकैलासाद्बिसकिसलयच्छेदपाथेयवन्तः
संपत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥ ११ ॥

आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं
वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु ।
काले काले भवति भवतो यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥ १२ ॥

मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
संदेशं मे तदनु जलद श्रोष्यसि श्रोत्रपेयम् ।
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र
क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपभुज्य ॥ १३ ॥

अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभि-
र्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ।
स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं
दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् ॥ १४ ॥

रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत्पुरस्ता-
द्वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य ।

येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते
बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः ॥ १५ ॥

त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः
प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः ।
सद्यःसीरोत्कषणसुरभि क्षेत्रमारुह्य मालं
किंचित्पश्चाद्व्रज लघुगतिर्भूय एवोत्तरेण ॥ १६ ॥

त्वामासारप्रशमितवनोपप्लवं साधु मूर्ध्ना
वक्ष्यत्यध्वश्रमपरिगतं सानुमानाम्रकूटः ।
न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ॥ १७ ॥

छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रै-
स्त्वय्यारूढे शिखरमचलः स्निग्धवेणीसवर्णे ।
नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां
मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥१८॥

स्थित्वा तस्मिन्वनचरवधूभुक्तकुञ्जे मुहूर्तं
तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः ।
रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ १९ ॥

तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-
र्जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः ।
अन्तःसारं घन तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥२०॥

नीपं दृष्ट्वा हरितकपिशं केसरैरर्धरूढै-
राविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम् ।
जग्ध्वारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम् ॥ २१

उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते ।
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत् ॥२२

पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नै-
र्नीडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः ।
त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः
संपत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥ २३ ॥

तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं
गत्वा सद्यः फलमविकलं कामुकत्वस्य लब्धा ।
तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यत्ता-
त्सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्म्याः ॥ २४ ॥

नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतो-
स्त्वत्संपर्कात्पुलकितमिव प्रौढपुष्पैः कदम्बैः ।
यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा-
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥ २५ ॥

विश्रान्तः सन् व्रज वननदीतीरजानां निषिञ्च-
न्नुद्यानानां नवजलकणैर्यूथिकाजालकानि ।

गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां
छायादानात्क्षणपरिचितः पुष्पलावीमुखानाम् ॥ २६ ॥

वक्रः पन्था तव भवतु च प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः ।
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि ॥ २७ ॥

वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः
संसर्पन्त्याः स्खलितसुभगं दर्शितावर्तनाभेः ।
निर्विन्ध्यायाः पथि भव रसाभ्यन्तरः सन्निपत्य
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ २८ ॥

वेणीभूतप्रतनुसलिला तामतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः ।
सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥२९॥

—मेघदूतम् ( पूर्वमेघः । )

---

## अलकावर्णनम् ।

Description of Alakâ.

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
संगीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् ।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ १ ॥

हस्ते लीलाकमलमलके बालकुन्दानुविद्धं
नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः ।
चूडापाशे नवकुरबकं चारु कर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥ २ ॥

यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि
ज्योतिश्छायाकुसुमरचितान्युत्तमस्त्रीसहायाः ।
आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूनं
त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥ ३ ॥

मन्दाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भि-
र्मन्दाराणामनुतटरुहां छायया वारितोष्णाः ।
अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः
संक्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥ ३ ॥

नीवीबन्धोच्छ्वसितशिथिलं यत्र बिम्बाधराणां
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।
अर्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपान्
ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥ ५ ॥

नेत्रा नीताः सततगतिना यद्विमानाग्रभूमी-
रालेख्यानां नवजलकणैर्दोषमुत्पाद्य सद्यः ।
शङ्कास्पृष्टा इव जलमुचस्त्वादृशा जालमार्गै-
र्धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥ ६ ॥

यत्र स्त्रीणां प्रियतमभुजालिङ्गनोच्छ्वासिताना-
मङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः ।
त्वत्संरोधापगमविशदैश्चन्द्रपादैर्निशीथे
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥ ७ ॥

अक्षय्यान्तर्भवननिधयः प्रत्यहं रक्तकण्ठै-
रुद्गायद्भिर्धनपतियशः किंनरैर्यत्र सार्धम् ।
वैभ्राजाख्यं विबुधवनितावारमुख्यासहाया
बद्धालापा बहिरुपवनं कामिनो निर्विशन्ति ॥ १० ॥

गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः
पत्रच्छेदैः कनककमलैः कर्णविभ्रंशिभिश्च ।
मुक्ताजालैः स्तनपरिसरच्छिन्नसूत्रैश्च हारै-
र्नैशो मार्गः सवितुरुदये सूच्यते कामिनीनां ॥ ११ ॥

वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं
पुष्पोद्भेदं सह किसलयैर्भूषणानां विकल्पान् ।
लाक्षारागं चरणकमलन्यासयोग्यं च यस्या-
मेकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥ १२ ॥

मत्वा देवं धनपतिसखं यत्र साक्षाद्वसन्तं
प्रायश्चापं न वहति भयान्मन्मथः षट्पदज्यम् ।
सभ्रूभङ्गप्रहितनयनैः कामिलक्ष्येष्वमोघै-
स्तस्यारम्भश्चतुरवनिताविभ्रमैरेव सिद्धः ॥ १४ ॥

—मेघदूतम् ( उत्तरमेघः । )

---

## ग्रीष्मवर्णनम् ।

Description of the Summer.

मृगाः प्रचण्डातपतापिता भृशं
  तृषा महत्या परिशुष्कतालवः ।
वनान्तरे तोयमिति प्रधाविता
  निरीक्ष्य भिन्नाञ्जनसंनिभं नभः ॥ ११ ॥

रवेर्मयूखैरभितापितो भृशं
  विदह्यमानः पथि तप्तपांसुभिः ॥
अवाङ्मुखो जिह्मगतिः श्वसन्मुहुः
  फणी मयूरस्य तले निषीदति ॥ १२ ॥

तृषा महत्या हतविक्रमोद्यमः
  श्वसन्मुहुर्दूरविदारिताननः ।
न हन्त्यदूरेऽपि गजान्मृगेश्वरो
  विलोलजिह्वश्चलिताग्रकेसरः ॥ १४ ॥

विशुष्ककण्ठाहृतसीकराम्भसो
  गभस्तिभिर्भानुमतोऽभितापिताः ।
प्रवृद्धतृष्णोपहता जलार्थिनो
  न दन्तिनः केसरिणोऽपि बिभ्यति ॥ १५ ॥

हुताग्निकल्पैः सवितुर्गभस्तिभिः
  कलापिनः क्लान्तशरीरचेतसः ।
न भोगिनं घ्नन्ति समीपवर्तिनं
  कलापचक्रेषु निवेशिताननम् ॥ १६ ॥

सभद्रमुस्तं परिशुष्ककर्दमं
 सरः खनन्नायतपोत्रमण्डलैः ।
प्रदीप्तभासा रविणाभितापितो
 वराहयूथो विशतीव भूतलम् ॥ १७ ॥

विवस्वता तीक्ष्णतरांशुमालिना
 सपङ्कतोयात्सरसोऽभितापितः ।
उत्प्लुत्य भेकस्तृषितस्य भोगिनः
 फणातपत्रस्य तले निषीदति ॥ १८ ॥

समुद्धृताशेषमृणालजालकं
 विपन्नमीनं द्रुतभीतसारसम् ।
परस्परोत्पीडनसंहतैर्गजैः
 कृतं सरः सान्द्रविमर्दकर्दमम् ॥ १९ ॥

सफेनलालावृतवक्त्रसंपुटं
 विनिःसृतालोहितजिह्वमुन्मुखम् ।
तृषाकुलं निःसृतमद्रिगह्वरा-
 दवेक्ष्यमाणं महिषीकुलं जलम् ॥ २१ ॥

पटुतरदवदाहात्प्लुष्ट शष्पप्ररोहाः
 परुषपवनवेगोत्क्षिप्तसंशुष्कपर्णाः ।
दिनकरपरितापक्षीणतोयाः समन्ता-
 द्विदधति भयमुच्चैर्वीक्ष्यमाणा वनान्ताः ॥ २२ ॥

श्वसिति विहगवर्गः शीर्णपर्णद्रुमस्थः
 कपिकुलमुपयाति क्लान्तमद्रेर्निकुञ्जम् ।
भ्रमति गवययूथः सर्वतस्तोयमिच्छ-
 ञ्छरभकुलमजिह्मं प्रोद्धरत्यम्बु कूपात् ॥ २३ ॥

विकचनवकुसुम्भस्वच्छसिन्दूरभासा
  प्रबलपवनवेगोद्भूतवेगेन तूर्णम् ।
तटविटपलताग्रालिङ्गनव्याकुलेन
  दिशि दिशि परिदग्धा भूमयः पावकेन ॥ २४ ॥

ज्वलति पवनवृद्धः पर्वतानां दरीषु
  स्फुटति पटुनिनादैः शुष्कवंशस्थलीषु ।
प्रसरति तृणमध्ये लब्धवृद्धिः क्षणेन
  ग्लपयति मृगवर्गं प्रान्तलग्नो दवाग्निः ॥ २५ ॥

बहुतर इव जातः शाल्मलीनां वनेषु
  स्फुरति कनकगौरं कोटरेषु द्रुमाणाम् ।
परिणतदलशाखानुत्पतन्प्रांशुवृक्षान्
  भ्रमति पवनधूतः सर्वतोऽग्निर्वनान्ते ॥ २६ ॥

गजगवयमृगेन्द्रा वह्निसंतप्तदेहाः ।
  सुहृद इव समेता द्वन्द्वभावं विहाय ।
हुतवहपरिखेदादाशु निर्गत्य कक्षा-
  द्विपुलपुलिनदेशान्निम्नगां संविशन्ति ॥ २७ ॥

कमलवनचिताम्बुः पाटलामोदरम्यः
  सुखसलिलनिषेकः सेव्यचन्द्रांशुहारः ।
व्रजतु तव निदाघः कामिनीभिः समेतो
  निशि सुललितगीते हर्म्यपृष्ठे सुखेन ॥ २८ ॥

—ऋतुसंहारे ग्रीष्मवर्णनम् ।

---

## प्रावृड्वर्णनम् ।

Description of the Rainy season.

ससीकराम्भोधरमत्तकुञ्जर-<br>
स्तडित्पताकोऽशनिशब्दमर्दलः ।<br>
समागतो राजवदुद्धतद्युति-<br>
र्घनागमः कामिजनप्रियः प्रिये ॥ १ ॥

तृषाकुलैश्चातकपक्षिणां कुलैः<br>
प्रयाचितास्तोयभरावलम्बिनः ।<br>
प्रयान्ति मन्दं बहुधारवर्षिणो<br>
बलाहकाः श्रोत्रमनोहरस्वनाः ॥ ३ ॥

बलाहकाश्चाशनिशब्दमर्दलाः<br>
सुरेन्द्रचापं दधतस्तडिद्गुणम् ।<br>
सुतीक्ष्णधारापतनोग्रसायकै-<br>
स्तुदन्ति चेतः प्रसभं प्रवासिनाम् ॥ ४ ॥

प्रभिन्नवैदूर्यनिभैस्तृणाङ्कुरैः<br>
समाचिता प्रोत्थितकन्दलीदलैः ।<br>
विभाति शुक्लेतररत्नभूषिता<br>
वराङ्गनेव क्षितिरिन्द्रगोपकैः ॥ ५ ॥

सदा मनोज्ञं स्वनदुत्सवोत्सुकं<br>
विकीर्णविस्तीर्णकलापशोभितम् ।<br>
ससंभ्रमालिङ्गनचुम्बनाकुलं<br>
प्रवृत्तनृत्यं कुलमद्य बर्हिणाम् ॥ ६ ॥

निपातयन्त्यः परितस्तटद्रुमान्
प्रवृद्धवेगैः सलिलैरनिर्मलैः ।
स्त्रियः प्रहृष्टा इव जातविभ्रमाः
प्रयान्ति नद्यस्त्वरितं पयोनिधिम् ॥ ७ ॥

तृणोत्करैरुद्गतकोमलाङ्कुरै-
र्विचित्रनीलैर्हरिणीमुखक्षतैः ।
वनानि वैन्ध्यानि हरन्ति मानसं
विभूषितान्युद्गतपल्लवैर्द्रुमैः ॥ ८ ॥

विलोलनेत्रोत्पलशोभिताननै-
र्मृगैः समन्तादुपजातसाध्वसैः ।
समाचिता सैकतिनी वनस्थली
समुत्सुकत्वं प्रकरोति चेतसः ॥ ९ ॥

अभीक्ष्णमुच्चैर्ध्वनता पयोमुचा
घनान्धकारीकृतशर्वरीष्वपि ।
तडित्प्रभादर्शितमार्गभूमयः
प्रयान्ति रागादभिसारिकाः स्त्रियः ॥ १० ॥

विपाण्डुरं कीटरजस्तृणान्वितं
भुजंगवद्वक्रगतिप्रसार्पितम् ।
ससाध्वसैर्भेककुलैर्निरीक्षितं
प्रयाति निम्नाभिमुखं नवोदकम् ॥ १३ ॥

विपत्रपुष्पां नलिनीं समुत्सुका
विहाय भृङ्गाः श्रुतिहारिनिस्वनाः ।
पतन्ति मूढाः शिखिनां प्रनृत्यतां
कलापचक्रेषु नवोत्पलाशया ॥ १४ ॥

वनद्विपानां नववारिदस्वनै-
मदान्वितानां ध्वनतां मुहुर्मुहुः ।
कपोलदेशा विमलोत्पलप्रभाः
सभृङ्गयूथैर्मदवारिभिश्चिताः ॥ १९ ॥

नीलोत्पलाभाम्बुदचुम्बितोपलाः
समाचिताः प्रस्रवणैः समन्ततः ।
प्रवृत्तनृत्यैः शिखिभिः समाकुलाः
समुत्सुकत्वं जनयन्ति भूधराः ॥ १६ ॥

कदम्बसर्जार्जुनकेतकीवनं
विकम्पयंस्तत्कुसुमाधिवासितः ।
ससीकराम्भोधरसङ्गशीतलः
समीरणः कं न करोति सोत्सुकम् ॥ १७ ॥

मुदित इव कदम्बैर्जातपुष्पैः समन्ता-
त्पवनचलितशाखैः शाखिभिर्नृत्यतीव ।
हसितमिव विधत्ते सूचिभिः केतकीनां
नवसलिलनिषेकाच्छान्ततापो वनान्तः ॥ २३ ॥

शिरसि बकुलमालां मालतीभिः समेतां
विकसितनवपुष्पैर्यूथिकाकुड्मलैश्च ।
विकचनवकदम्बैः कर्णपूरं वधूनां
रचयति जलदौघः कान्तवत्काल एषः ॥ २४ ॥

नवजलकणसङ्गाच्छीततामादधानः
कुसुमभरनतानां लासकः पादपानाम् ।
जनितरुचिरगन्धः केतकीनां रजोभिः
परिहरति नभस्वान्प्रोषितानां मनांसि ॥ २६ ॥

जलधरविनतानामाश्रयोऽस्माकमुच्चै-
रयमिति जलसेकैस्तोयदास्तोयनम्राः ।
अतिशयपरुषाभिर्ग्रीष्मवह्नेः शिखाभिः
समुपजनिततापं ह्लादयन्तीव विन्ध्यम् ॥ २७ ॥
बहुगुणरमणीयः कामिनीचित्तहारी
तरुविटपलतानां बान्धवो निर्विकारः ।
जलदसमय एष प्राणिनां प्राणभूतो
दिशतु तव हितानि प्रायशो वाञ्छितानि ॥ २८ ॥

—ऋतुसंहारे प्रावृड्वर्णनम् ।

---

## शरद्वर्णनम् ।

Description of Autumn.

काशांशुका विकचपद्ममनोज्ञवक्त्रा
सोन्मादहंसरवनूपुरनादरम्या ।
आपक्वशालिरुचिरा तनुगात्रयष्टिः
प्राप्ता शरन्नववधूरिव रूपरम्या ॥ १ ॥
काशैर्मही शिशिरदीधितिना रजन्यो
हंसैर्जलानि सरितां कुमुदैः सरांसि
सप्तच्छदैः कुसुमभारनतैर्वनान्ताः
शुक्लीकृतान्युपवनानि च मालतीभिः ॥ २ ॥
व्योम क्वचिद्रजतशङ्खमृणालगौरै-
स्त्यक्ताम्बुभिर्लघुतया शतशः प्रयातैः ।
संलक्ष्यते पवनवेगचलैः पयोदै
राजेव चामरवरैरुपवीज्यमानः ॥ ४ ॥

भिन्नाञ्जनप्रचयकान्ति नभो मनोज्ञं
बन्धूकपुष्परचितारुणता च भूमिः ।
वप्राश्च चारुकलमावृतभूमिभागाः
प्रोत्कण्ठयन्ति न मनो भुवि कस्य यूनः ॥ ५ ॥

मन्दानिलाकुलितचारुमनोज्ञशाखः
पुष्पोद्गमप्रचयकोमलपल्लवाग्रः ।
मत्तद्विरेफपरिपीतमधुप्रसेक-
श्चित्तं विदारयति कस्य न कोविदारः ॥ ६ ॥

तारागणप्रवरभूषणमुद्वहन्ती
मेघावरोधपरिमुक्तशशाङ्कवक्त्रा ।
ज्योत्स्नादुकूलममलं रजनी दधाना
वृद्धिं प्रयात्यनुदिनं प्रमदेव बाला ॥ ७ ॥

कारण्डवाननविघट्टितवीचिमालाः
कादम्बसारसचयाकुलतीरदेशाः ।
कुर्वन्ति हंसविरुतैः परितो जनस्य
प्रीतिं सरोरुहरजोरुणितास्तटिन्यः ॥ ८ ॥

नेत्रोत्सवो हृदयहारिमरीचिमालः
प्रह्लादकः शिशिरसीकरवारिवर्षी ।
पत्युर्वियोगविषदिग्धशरक्षतानां
चन्द्रो दहत्यतितरां तनुमङ्गनानाम् ॥ ९ ॥

आकम्पयन्फलभरानतशालिजाला-
नानर्तयंस्तरुवरान्कुसुमावनम्रान् ।
उत्फुल्लपङ्कजवनां नलिनीं विधुन्वन्
यूना मनश्चलयति प्रसभं नभस्वान् ॥ १० ॥

सोन्मादहंसमिथुनैरुपशोभितानि
स्वच्छप्रफुल्लकमलोत्पलभूषितानि ।
मन्दप्रभातपवनोद्गतवीचिमाला-
न्युत्कण्ठयन्ति सहसा हृदयं सरांसि ॥ ११ ॥

नष्टं धनुर्बलभिदो जलदोदरेषु
सौदामिनी स्फुरति नाद्य वियत्पताका ।
धुन्वन्ति पक्षपवनैर्न नभो बलाकाः
पश्यन्ति नोन्नतमुखा गगनं मयूराः ॥ १२ ॥

नृत्यप्रयोगरहिताञ्छिखिनो विहाय
हंसानुपैति मदनो मधुरप्रगीतान् ।
मुक्त्वा कदम्बकुटजार्जुनसर्जनीपा-
न्सप्तच्छदानुपगता कुसुमोद्गमश्रीः ॥ १३ ॥

शेफालिकाकुसुमगन्धमनोहराणि
स्वस्थस्थिताण्डजकुलप्रतिनादितानि ।
पर्यन्तसंस्थितमृगीनयनोत्पलानि
प्रोत्कण्ठयन्त्युपवनानि मनांसि पुंसाम् ॥ १४ ॥

कह्लारपद्मकुमुदानि मुहुर्विधन्वं-
स्तत्संगमादधिकशीतलतामुपेतः ।
उत्कण्ठयत्यतितरां पवनः प्रभाते
मत्रांन्तलग्नतुहिनाम्बुविधूयमानः ॥ १५ ॥

संपन्नशालिनिचयावृतभूतलानि
स्वस्थस्थितप्रचुरगोकुलशोभितानि ॥
हंसैः ससारसकुलैः प्रतिनादितानि ।
सीमान्तराणि जनयन्ति नृणां प्रमोदम् ॥ १६ ॥

हंसैर्जिता सुललिता गतिरङ्गनाना-
मम्भोरुहैर्विकसितैर्मुखचन्द्रकान्तिः ।
नीलोत्पलैर्मदकलानि विलोकितानि
भ्रूविभ्रमाश्च रुचिरास्तनुभिस्तरंगैः ॥ १७ ॥
शरदि कुमुदसङ्गाद्वायवो वान्ति शीता
विगतजलदवृन्दा दिग्विभागा मनोज्ञाः ।
विगतकलुषमम्भः श्यानपङ्का धरित्री
विमलकिरणचन्द्रं व्योम ताराविचित्रम् ॥ २२ ॥

—ऋतुसंहारे शरद्वर्णनम् ।

---

## हेमन्तवर्णनम् ।

### Description of Winter.

नवप्रवालोद्गमसस्यरम्यः
प्रफुल्ललोध्रः परिपक्वशालिः
विलीनपद्मः प्रपतत्तुषारो
हेमन्तकालः समुपागतोऽयम् ॥ १ ॥
मनोहरैः कुङ्कुमरागरक्तै-
स्तुषारकुन्देन्दुनिभैश्च हारैः ।
विलासिनीनां स्तनशालिनीना-
मलंक्रियन्ते स्तनमण्डलानि ॥ २ ॥
प्रभूतशालिप्रसवैश्चितानि
मृगाङ्गनायूथविभूषितानि ।
मनोहरक्रौञ्चनिनादितानि
सीमान्तराण्युत्सुकयन्ति चेतः ॥ ८ ॥

प्रफुल्लनीलोत्पलशोभितानि
सोन्मादकादम्बविभूषितानि ।
प्रसन्नतोयानि सुशीतलानि
सरांसि चेतांसि हरन्ति पुंसाम् ॥ ९ ॥

पाकं व्रजन्ती हिमजातशीतै-
राधूयमाना सततं मरुद्भिः ।
प्रिये प्रियङ्गुः प्रियविप्रयुक्ता
विपाण्डुतां याति विलासिनीव ॥ १० ॥

बहुगुणरमणीयो योषितां चित्तहारी
परिणतबहुशालिव्याकुलग्रामसीमा ।
सततमतिमनोज्ञः क्रौञ्चमालापरीतः
प्रदिशतु हिमयुक्तः काल एषः सुखं वः ॥ १८ ॥

—ऋतुसंहारे हेमन्तवर्णनम् ।

---

## वसंतवर्णनम् ।

Description of the Spring.

प्रफुल्लचूताङ्कुरतीक्ष्णसायको
द्विरेफमालाविलसद्धनुर्गुणः ।
मनांसि वेद्धुं सुरतप्रसङ्गिनां
वसन्तयोद्धा समुपागतः प्रिये ॥ १ ॥

द्रुमाः सपुष्पाः सलिलं सपद्मं
स्त्रियः सकामाः पवनः सुगन्धिः ।
सुखाः प्रदोषा दिवसाश्च रम्याः
सर्वं प्रिये चारुतरं वसन्ते ॥ २ ॥

वापीजलानां मणिमेखलानां
शशाङ्कभासां प्रमदाजनानाम् ।
चूतद्रुमाणां कुसुमान्वितानां
ददाति सौभाग्यमयं वसन्तः ॥ ३ ॥

कर्णेषु योग्यं नवकर्णिकारं
चलेषु नीलेष्वलकेष्वशोकम् ।
पुष्पं च फुल्लं नवमल्लिकायाः
प्रयाति कान्तिं प्रमदाजनानाम् ॥ ५ ॥

ताम्रप्रवालस्तबकावनम्रा-
श्चूतद्रुमाः पुष्पितचारुशाखाः ।
कुर्वन्ति कामं पवनावधूताः
पर्युत्सुकं मानसमङ्गनानाम् ॥ १५ ॥

आ मूलतो विद्रुमरागताम्रं
सपल्लवाः पुष्पचयं दधानाः ।
कुर्वन्त्यशोका हृदयं सशोकं
निरीक्ष्यमाणा नवयौवनानाम् ॥ १६ ॥

मत्तद्विरेफपरिचुम्बितचारुपुष्पा
मन्दानिलाकुलितनम्रमृदुप्रवालाः ।
कुर्वन्ति कामिमनसां सहसोत्सुकत्वं
चूताभिरामकलिकाः समवेक्ष्यमाणाः ॥ १७ ॥

आदीप्तवह्निसदृशैर्मरुतावधूतैः
सर्वत्र किंशुकवनैः कुसुमावनम्रैः
सद्यो वसन्तसमये हि समाचितेयं
रक्तांशुका नववधूरिव भाति भूमिः ॥ १९ ॥

किं किंशुकैः शुकमुखच्छविभिर्न भिन्नं
किं कर्णिकारकुसुमैर्न कृतं नु दग्धम् ।
यत्कोकिलः पुनरयं मधुरैर्वचोभि-
र्यूनां मनः सुवदनानिहितं निहन्ति ॥ २० ॥

पुंस्कोकिलैः कलवचोभिरुपात्तहर्षैः
कूजद्भिरुन्मदकलानि वचांसि भृङ्गैः ।
लज्जान्वितं सविनयं हृदयं क्षणेन
पर्याकुलं कुलगृहेऽपि कृतं वधूनाम् ॥ २१ ॥

आकम्पयन्कुसुमिताः सहकारशाखा
विस्तारयन्परभृतस्य वचांसि दिक्षु ।
वायुर्विवाति हृदयानि हरन्नराणां
नीहारपातविगमात्सुभगो वसन्ते ॥ २२ ॥

कुन्दैः सविभ्रमवधूहसितावदातै-
रुद्द्योतितान्युपवनानि मनोहराणि ।
चित्तं मुनेरपि हरन्ति निवृत्तरागं
प्रागेव रागमलिनानि मनांसि यूनाम् ॥ २३ ॥

आम्रीमञ्जुलमञ्जरीवरशरः सत्किंशुकं यद्धनु-
र्ज्यायस्यालिकुलं कलङ्करहितं छत्रं सितांशुः सितम् ।
मत्तेभो मलयानिलः परभृतो यद्बन्दिनो लोकजित्
सोऽयं वो वितरीतरीतु वितनुर्भद्रं वसन्तान्वितः ॥ २४ ॥

—ऋतुसंहारे वसंतवर्णनम् ।

आमत्तानां श्रवणसुभगैः कूजितैः कोकिलानां
सानुक्रोशं मनसिजरुजः सह्यतां पृच्छतेव ।
अङ्के चूतप्रसवसुरभिर्दक्षिणो मारुतो मे
सान्द्रस्पर्शः करतल इव व्यापृतो माधवेन ॥ ४ ॥
रक्ताशोकरुचा विशेषितगुणो बिम्बाधरालक्तकः
प्रत्याख्यातविशेषकं कुरबकं श्यामावदातारुणम् ।
आक्रान्ता तिलकक्रिया च तिलकैर्लग्नद्विरेफाञ्जनैः
सावज्ञेव मुखप्रसाधनविधौ श्रीर्माधवी योषिताम् ॥ ५ ॥

—मालविकाग्निमित्रे तृतीयोऽङ्कः ।

---

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
संनद्धं यदपि स्थितं कुरबकं तत्कोरकावस्थया ।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम् ॥ ४ ॥

—शाकुन्तले षष्ठोऽङ्कः ।

---

**राजाः**—ननु प्रतिपदमेव तावदवलोकयामि । अत्र हि,
अग्रे स्त्रीनखपाटलं कुरबकं श्यामं द्वयोर्भागयो-
र्बालाशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति ।
ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी
मुग्धत्वस्य च यौवनस्य च सखे मध्ये मधुश्रीः स्थिता ॥७॥

—विक्रमोर्वशीये द्वितीयोऽङ्कः ।

---

**राजा:—**( ऊर्ध्वमवलोक्य ) कथमर्धं गतं दिवसस्य । अतः खलु

उष्णार्तः शिशिरे निषीदति तरोर्मूलालवाले शिखी
निर्भिद्योपरि कर्णिकारमुकुलान्याशेरते षट्पदाः ।
तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते
क्रीडावेश्मनि चैव पञ्जरशुकः क्लान्तो जलं याचते ॥ २२ ॥

—विक्रमोर्वशीये द्वितीयोऽङ्कः ।

---

सुभगसलिलावगाहाः पाटलसंसर्गिसुरभिवनवाताः ।
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥ ३ ॥
ईषदीषच्चुम्बितानि भ्रमरैः सुकुमारकेसरशिखानि ।
अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि ॥ ४ ॥

—शाकुन्तले प्रथमोऽङ्कः ।

---

उपहितं शिशिरापगमश्रिया
मुकुलजालमशोभत किंशुके ।
प्रणयिनीव नखक्षतमण्डनं
प्रमदया मदयापितलज्जया ॥ ३१ ॥

व्रणगुरुप्रमदाधरदुःसहं
जघननिर्विषयीकृतमेखलम् ।
न खलु तावदशेषमपोहितं
रविरलं विरलं कृतवान्हिमम् ॥ ३२ ॥

—रघुवंशे नवमः सर्गः ।

अभिनयान्परिचेतुमिवोद्यता
मलयमारुतकम्पितपल्लवा ।
अमदयत्सहकारलता मनः
सकलिका कलिकामजितामपि ॥ ३३ ॥

प्रथममन्यभृताभिरुदीरितः
प्रविरला इव मुग्धवधूकथाः ।
सुरभिगन्धिषु शुश्रुविरे गिरः
कुसुमितासु मिता वनराजिषु ॥ ३४ ॥

श्रुतिसुखभ्रमरस्वनगीतयः
कुसुमकोमलदन्तरुचो बभुः ।
उपवनान्तलताः पवनाहतैः
किसलयैः सलयैरिव पाणिभिः ॥ ३५ ॥

ललितविभ्रमबन्धविचक्षणं
सुरभिगन्धपराजितकेसरम् ।
पतिषु निर्विविशुर्मधुमङ्गनाः
स्मरसखं रसखण्डनवर्जितम् ॥ ३६ ॥

शुशुभिरे स्मितचारुतराननाः
स्त्रिय इव श्लथशिञ्जितमेखलाः ।
विकचतामरसा गृहदीर्घिका
मदकलोदकलोलविहंगमाः ॥ ३७ ॥

उपययौ तनुतां मधुखण्डिता
हिमकरोदयपाण्डुमुखच्छविः

सदृशमिष्टसमागमनिर्वृतिं
वनितयानितया रजनीवधूः ॥ ३८ ॥

अपतुषारतया विशदप्रभैः
सुरतसङ्गपरिश्रमनोदिभिः ।
कुसुमचापमतेजयदंशुभि-
र्हिमकरो मकरोर्जितकेतनम् ॥ ३९ ॥

हुतहुताशनदीप्ति वनश्रियः
प्रतिनिधिः कनकाभरणस्य यत् ।
युवतयः कुसुमं दधुराहितं
तदलके दलकेसरपेशलम् ॥ ४० ॥

अलिभिरञ्जनबिन्दुमनोहरैः
कुसुमपङ्क्तिनिपातिभिरङ्कितः ।
न खलु शोभयति स्म वनस्थलीं
न तिलकस्तिलकः प्रमदामिव ॥ ४१ ॥

अमदयन्मधुगन्धसनाथया
किसलयाधरसंगतया मनः
कुसुमसंभृतया नवमल्लिका
स्मितरुचा तरुचारुविलासिनी ॥ ४२ ॥

अरुणरागनिषेधिभिरंशुकैः
श्रवणलब्धपदैश्च यवाङ्कुरैः
परभृताविरुतैश्च विलासिनः
स्मरबलैरबलैकरसाः कृताः ॥ ४३ ॥

उपचितावयवा शुचिभिः कणै-
रलिकदम्बकयोगमुपेयुषी ।
सदृशकान्तिरलक्ष्यत मञ्जरी
तिलकजालकजालकमौक्तिकैः ॥ ४४ ॥

ध्वजपटं मदनस्य धनुर्भृत-
श्छविकरं मुखचूर्णमृतुश्रियः ।
कुसुमकेसररेणुमलिव्रजाः
सपवनोपवनोत्थितमन्वयुः ॥ ४५ ॥

अनुभवन्नवदोलमृतूत्सवं
पटुरपि प्रियकण्ठजिघृक्षया ।
अनयदासनरज्जुपरिग्रहे
भुजलतां जलतामबलाजनः ॥ ४६ ॥

त्यजत मानमलं बत विग्रहै-
र्न पुनरेति गतं चतुरं वयः ।
परभृताभिरितीव निवेदिते
स्मरमते रमते स्म वधूजनः ॥ ४७ ॥

—रघुवंशे नवमः सर्गः ।

### Description of a deer running fast, being frightened at the shot of an arrow aimed at by King Dushyanta.

**राजा**—सूत, दूरममुना सारङ्गेण वयमाकृष्टाः । अयं पुनरि-
दानीमपि

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ ७ ॥

—शाकुन्तले प्रथमोऽङ्कः ।

## Dialogues.

### दुष्यन्तशकुन्तलासंवादः।

King Dushyanta during his hunting excursion, accidently meets Shakuntala while she was engaged along with her female friends in watering trees.

इत इतः सख्यौ।

**राजा**—( कर्णं दत्वा ) अये, दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते। यावदत्र गच्छामि। ( परिक्रम्यावलोक्य च ) अये, एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्तन्ते ( निपुणं निरूप्य ) अहो, मधुरमासां दर्शनम्।

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः॥ १९॥

यावदिमां छायामाश्रित्य प्रतिपालयामि। ( विलोकयन्स्थितः। )

( ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला )

**शकुन्तला**—इत इतः सख्यौ।

**अनसूया**—हला शकुन्तले, त्वत्तोऽपि तातकाश्यपस्याश्रमवृक्षकाः प्रियतरा इति तर्कयामि। येन नवमालिकाकुसुमपेलवा त्वमप्येतेषामालवालपूरणे नियुक्ता।

**शकुन्तला**—न केवलं तातनियोग एव। अस्ति मे सोदरस्नेह एतेषु। ( इति वृक्षसेचनं रूपयति। )

**राजा**—कथमियं सा कण्वदुहिता ? असाधुदर्शी खलु तत्रभवान् काश्यपः, य इमामाश्रमधर्मे नियुङ्क्ते।

इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
समिल्लतां छेत्तुमृषिर्व्यवस्यति ॥ १६ ॥

भवतु । पादपान्तर्हित एव विस्रब्धं तावदेनां पश्यामि । ( इति तथा करोति । )

**शकुन्तला**—सखि अनसूये, अतिपिनद्धेन वल्कलेन प्रियंवदया नियन्त्रितास्मि । शिथिलय तावदेतत् ।

**प्रियंवदा**—( सहासम् ) अत्र पयोधरविस्तारयितृ आत्मनो यौवनमुपालभस्व ।

**अनसूया**—तथा । ( इति शिथिलयति । )

**राजा**—काममननुरूपमस्या वयसो वल्कलं, न पुनरलंकारश्रियं न पुष्यति । कुतः ?

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥ १७ ॥

**शकुन्तला**—( अग्रतोऽवलोक्य ) एष वातेरितपल्लवाङ्गुलीभिस्त्वरयतीव मां केसरवृक्षकः । यावदेनं संभावयामि । ( इति परिक्रामति । )

**प्रियंवदा**—हला शकुन्तले, अत्रैव तावन्मुहूर्तं तिष्ठ, यावत्त्वयोपगतया लतासनाथ इवायं केसरवृक्षकः प्रतिभाति ।

**शकुन्तला**—अतः खलु प्रियंवदासि त्वम् ।

**राजा**—प्रियमपि तथ्यमाह शकुन्तलां प्रियंवदा । अस्याः खलु

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥ १८ ॥

**अनसूया**—हला शकुन्तले, इयं स्वयंवरवधूः सहकारस्य त्वया कृतनामधेया वनज्योत्स्नेति नवमालिका । एनां विस्मृतवत्यसि ।

**शकुन्तला**—तदात्मानमपि विस्मरिष्यामि । ( लतामुपेत्यावलोक्य च ) हला, रमणीये खलु काल एतस्य लतापादपमिथुनस्य व्यतिकरः संवृत्तः । नवकुसुमयौवना वनज्योत्स्ना, स्निग्धपल्लवतयोपभोगक्षमः सहकारः । ( इति पश्यन्ती तिष्ठति । )

**प्रियंवदा**—अनसूये, जानासि किं शकुन्तला वनज्योत्स्नामतिमात्रं पश्यतीति ?

**अनसूया**—न खलु विभावयामि । कथय ।

**प्रियंवदा**—यथा वनज्योत्स्नानुरूपेण पादपेन संगता, अपि नामैवमहमप्यात्मनोऽनुरूपं वरं लभेयेति ।

**शकुन्तला**—एष नूनं तवात्मगतो मनोरथः । ( इति कलशमावर्जयति । )

**राजा**—अपि नाम कुलपतेरियमसवर्णक्षेत्रसंभवा स्यात्—अथवा कृतं संदेहेन—

असंशयं क्षत्रपरिग्रहक्षमा
यदार्यमस्यामभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ॥ १९ ॥

तथापि तत्त्वत एनामुपलप्स्ये ।

**शकुन्तला**—( ससंभ्रमम् ) अम्मो । सलिलसेकसंभ्रमोद्गतो नव-मालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्तते । (इति भ्रमरबाधां रूपयति ।)

**राजा**—( सस्पृहम् )

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ २० ॥

**शकुन्तला**—न एष दुष्टो विरमति । अन्यतो गमिष्यामि । ( पदान्तरे स्थित्वा सदृष्टिक्षेपम् ) कथमितोऽप्यागच्छति ? हला, परित्रायेथां मामनेन दुर्विनीतेन दुष्टमधुकरेण परिभूयमानाम् ।

**उभे**—( सस्मितम् ) के आवां परित्रातुम् । दुष्यन्तमाक्रन्द । राजरक्षितव्यानि तपोवनानि नाम ।

**राजा**—अवसरोऽयमात्मानं प्रकाशयितुम् । न भेतव्यं न भेतव्यम्—( इत्यर्धोक्ते स्वगतम् ) राजभावस्त्वभिज्ञातो भवेत् । भवतु । एवं तावदभिधास्ये ।

**शकुन्तला**—( पदान्तरे स्थित्वा, सदृष्टिक्षेपम् ) कथमितोऽपि मामनुसरति ?

**राजा**—( सत्वरमुपसृत्य )

कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम् ।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ॥ २१ ॥

( सर्वा राजानं दृष्ट्वा किंचिदिव संभ्रान्ताः । )

**अनसूया**—आर्य, न खलु किमप्यत्याहितम् । इयं नौ प्रियसखी मधुकरेणाभिभूयमाना कातरीभूता । ( इति शकुन्तलां दर्शयति । )

**राजा**—( शकुन्तलाभिमुखो भूत्वा ) अपि तपो वर्धते ?

( शकुन्तला साध्वसादवचना तिष्ठति । )

**अनसूया**—इदानीमतिथिविशेषलाभेन । हला शकुन्तले, गच्छोटजम् । फलमिश्रमर्घमुपहर । इदं पादोदकं भविष्यति ।

**राजा**—भवतीनां सूनृतयैव गिरा कृतमातिथ्यम् ।

**प्रियंवदा**—तेन ह्यस्यां प्रच्छायशीतलायां सप्तपर्णवेदिकायां मुहूर्तमुपविश्य परिश्रमविनोदं करोत्वार्यः ।

**राजा**—नूनं यूयमप्यनेन कर्मणा परिश्रान्ताः ।

**अनसूया**—हला शकुन्तले, उचितं नः पर्युपासनमतिथीनाम् । अत्रोपविशामः । ( इति सर्वा उपविशन्ति । )

**शकुन्तला**—( आत्मगतम् ) किं नु खल्विमं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता ?

**राजा**—( आत्मगतम् ) अहो समवयोरूपरमणीयं भवतीनां सौहार्दम् ।

**प्रियंवदा**—( जनान्तिकम् ) अनसूये, को नु खल्वेष चतुरगम्भीराकृतिश्चतुरं प्रियमालपन्प्रभाववानिव लक्ष्यते ?

**अनसूया**—सखि, ममाप्यस्ति कौतूहलम् । पृच्छामि तावदेनम् । ( प्रकाशम् ) आर्यस्य मधुरालापजनितो विश्रम्भो मां मन्त्रयते—कतम आर्येण राजर्षिवंशोऽलंक्रियते, कतमो वा विरहपर्युत्सुकजनः कृतो देशः, किंनिमित्तं वा सुकुमारतरोऽपि तपोवनगमनपरिश्रमस्यात्मा पदमुपनीतः ?

**शकुन्तला**—( आत्मगतम् ) हृदय, मोत्ताम्य । एषा त्वया चिन्तितान्यनसूया मन्त्रयते ।

**राजा**—( आत्मगतम् ) कथमिदानीमात्मानं निवेदयामि, कथं वात्मापहारं करोमि ? भवतु । एवं तावदे । ( प्रकाशम् ) भवति यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः सोऽहमविघ्नक्रियोपलम्भाय धर्मारण्यमिदमायातः ।

**अनसूया**—सनाथा इदानीं धर्मचारिणः ।

( शकुन्तला शृङ्गारलज्जां रूपयति । )

**सख्यौ**—( उभयोराकारं विदित्वा, जनान्तिकम् ) हला शकुन्तले, यद्यत्राद्य तातः संनिहितो भवेत् ।

**शकुन्तला**—ततः किं भवेत् ?

**सख्यौ**—इमं जीवितसर्वस्वेनाप्यतिथिविशेषं कृतार्थं करिष्यति ।

**शकुन्तला**—युवामपेतम् । किमपि हृदये कृत्वा मन्त्रयेथे । न युवयोर्वचनं श्रोष्यामि ।

**राजा**—वयमपि तावद्भवत्योः सखीगतं किमपि पृच्छामः ।

**सख्या**—आर्य, अनुग्रह इवेयमभ्यर्थना ।

**राजा**—भगवान् काश्यपः शाश्वते ब्रह्मणि स्थित इति प्रकाशः । इयं च वः सखी तदात्मजेति कथमेतत् ?

**अनसूया**—शृणोत्वार्यः । अस्ति कोऽपि कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षिः ।

**राजा**—अस्ति । श्रूयते ।

**अनसूया**—तमावयोः प्रियसख्याः प्रभवमवगच्छ । उज्झितायाः शरीरसंवर्धनादिभिस्तातकाश्यपोऽस्याः पिता ।

—उज्झितशब्देन जनितं मे कौतूहलम् । आ मूलाच्छ्रोतुमिच्छामि ।

**अनसूया**—शृणोत्वार्यः । गौतमीतीरे पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्मेनका नामाप्सराः प्रेषिता नियमविघ्नकारिणी ।

**राजा**—अस्त्येतदन्यसमाधिभीरुत्वं देवानाम् ।

**अनसूया**—ततो वसन्तोदारसमये तस्या उन्मादयितृ रूपं प्रेक्ष्य——( इत्यर्धोक्ते लज्जया विरमति । )

**राजा**—परस्ताज्ज्ञायत एव । सर्वथाप्सरःसंभवैषा ।

**अनसुया**—अथ किम् ?

**राजा**—उपपद्यते ।

मानुषीषु कथं वा स्यादस्य रूपस्य संभवः ।
न प्रभा तरलं ज्योतिरुदेति वसुधातलात् ॥ २२ ॥

( शकुन्तलाधोमुखी तिष्ठति । )

**राजा**—( आत्मगतम् ) लब्धावकाशो मे मनोरथः । किंतु सख्याः परिहासोदाहृतां वरप्रार्थनां श्रुत्वा धृतद्वैधीभावकातरं मे मनः ।

**प्रियंवदा**—( सस्मितं शकुन्तलां विलोक्य नायकाभिमुखी भूत्वा ) पुनरपि वक्तुकाम इवार्यः ।

( शकुन्तला सखीमङ्गुल्या तर्जयति । )

**राजा**—सम्यगुपलक्षितं भवत्या । अस्ति नः सच्चरितश्रवणलोभादन्यदपि प्रष्टव्यम् ।

**प्रियंवदा**—अलं विचार्य । अनियन्त्रणानुयोगस्तपस्विजनो नाम

**राजा**—इति सखीं ते ज्ञातुमिच्छामि ।

वैखानसं किमनया व्रतमा प्रदाना-
द्व्यापाररोधि मदनस्य निषेवितव्यम् ।
अत्यन्तमेव मदिरेक्षणवल्लभाभि-
राहो निवत्स्यति समं हरिणाङ्गनाभिः ॥ २३ ॥

**प्रियंवदा**—आर्य, धर्मचरणेऽपि परवशोऽयं जनः । गुरोः पुन-रस्या अनुरूपवरप्रदाने संकल्पः ।

**राजा**—( आत्मगतम् ) न दुरवापेयं खलु प्रार्थना ।

भव हृदय साभिलाषं संप्रति संदेहनिर्णयो जातः ।
आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् ॥ २४ ॥

**शकुन्तला**—( सरोषमिव ) अनसूये, गमिष्याम्यहम् ।

**अनसूया**—किंनिमित्तम् ?

**शकुन्तला**—इमामसंबद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवे-दयिष्यामि ।

**अनसूया**—सखि, न युक्तमकृतसत्कारमतिथिविशेषं विसृज्य स्वच्छन्दतो गमनम् ।

( शकुन्तला न किंचिदुक्त्वा प्रस्थितैव । )

**राजा**—( ग्रहीतुमिच्छन्निगृह्यात्मानम्, आत्मगतम् ) अहो चेष्टा-प्रतिरूपिका कामिजनमनोवृत्तिः । अहं हि—

अनुयास्यन्मुनितनयां सहसा विनयेन वारितप्रसरः ।
स्थानादनुच्चलन्नपि गत्वेव पुनः प्रतिनिवृत्तः ॥ २५ ॥

**प्रियंवदा**—( शकुन्तलां निरुध्य ) हला न ते युक्तं गन्तुम् ।

**शकुन्तला**—( सभ्रूभङ्गम् ) किंनिमित्तम् ?

**प्रियंवदा**—वृक्षसेचने द्वे धारयसि मे । एहि तावत् । आत्मानं मोचयित्वा ततो गमिष्यसि ( इति बलादेनां निवर्तयति । )

**राजा**—भद्रे, वृक्षसेचनादेव परिश्रान्तामत्रभवतीं लक्षये । तथा ह्यस्याः—

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।
स्रस्तं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ॥२६॥

तदहमेनामनृणां करोमि । ( इत्यङ्गुलीयं दातुमिच्छति । )

**शकुन्तला**—( आत्मगतम् ) यद्यात्मनः प्रभविष्यामि । ( प्रकाशम् ) का त्वं विसर्जितव्यस्य रोद्धव्यस्य वा ?

**राजा**—( शकुन्तलां विलोक्य आत्मगतम् ) किं नु खलु यथा वयमस्यामेवमियमप्यस्मान्प्रति स्यात् ? अथवा लब्धावकाशा मे प्रार्थना । कुतः ?

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यभिमुखं मयि भाषमाणे ।
कामं न तिष्ठति मदाननसंमुखीना
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥ २७ ॥

—शाकुन्तले प्रथमोऽङ्कः ।

## दुष्यन्तविदूषकसंवादः ।

**राजा**—गच्छाग्रतः ।

**विदूषक**—एतु भवान् ।

( इत्युभौ परिक्रम्योपविष्टौ । )

**राजा**—माढव्य, अनवाप्तचक्षुःफलोऽसि, येन त्वया दर्शनीयं न दृष्टम् ।

**विदूषक**—ननु भवानग्रतो मे वर्तते ।

**राजा**—सर्वः खलु कान्तमात्मानं पश्यति, तामाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि ।

**विदूषक**—( स्वगतम् ) भवतु । अस्यावसरं न दास्ये । भो वयस्य, ते तापसकन्यकाभ्यर्थनीया दृश्यते ।

**राजा**—सखे, न परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तते ।

सुरयुवतिसंभवं किल मुनेरपत्यं तदुज्झिताधिगतम् ।
अर्कस्योपरि शिथिलं च्युतमिव वनमालिकाकुसुमम् ॥ ८ ॥

**विदूषक**—( विहस्य ) यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिण्यामभिलाषो भवेत्, तथा स्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना ।

**राजा**—न तावदेनां पश्यसि येनैवमवादीः ।

**विदूषक**—तत् खलु रमणीयमेव, यद्भवतोऽपि विस्मयमुत्पादयति ।

**राजा**—वयस्य, किं बहुना ?

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन मनसा विधिना कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ ९ ॥

**विदूषकः**—यद्येवं प्रत्यादेश इदानीं रूपवतीनाम् ।

**राजा**—इदं च मे मनसि वर्तते—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥ १० ॥

**विदूषकः**—तेन हि लघु परित्रायतामेनां भवान् । मा कस्यापि तपस्विन इंगुदीतैलमिश्रचिक्कणशीर्षस्य आरण्यकस्य हस्ते पतिष्यति ।

**राजा**—परवती खलु तत्रभवती। न च संनिहितोऽत्र गुरुजनः ।

**विदूषकः**—अत्रभवन्तमन्तरेण कीदृशस्तस्या दृष्टिरागः ?

**राजा**—निसर्गादेवाप्रगल्भस्तपस्विकन्याजनः । तथापि तु

अभिमुखे मयि संहृतमीक्षणं
हसितमन्यनिमित्तकृतोदयम् ।
विनयवारितवृत्तिरतस्तया
न विवृतो मदनो न च संवृतः ॥ ११ ॥

**विदूषकः**—न खलु दृष्टमात्रस्य तवाङ्कं समारोहति ।

**राजा**—मिथःप्रस्थाने पुनः शालीनतयापि काममाविष्कृतो भावस्तत्रभवत्या । तथा हि—

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ १२ ॥

**विदूषकः**—तेन हि गृहीतपाथेयो भव । कृतं त्वयोपवनं तपोवनमिति पश्यामि ।

**राजा**—सखे, तपस्विभिः कैश्चित्परिज्ञातोऽस्मि । चिन्तय तावत्केनापदेशेन सकृदप्याश्रमे वसामः ?

**विदूषकः**—कोऽपरोऽपदेशस्तव राज्ञः ? नीवारषष्ठभागमस्माकमुपहरन्त्विति ।

**राजा**—मूर्ख, अन्यद्भागधेयमेतेषां रक्षणे निपतति, यद्रत्नराशीनपि विहायाभिनन्द्यम् । पश्य—

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत्फलम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ १३ ॥

—शाकुन्तले द्वितीयोऽङ्कः ।

---

Dushyanta and Shakuntala open out their minds to each other and declare their love for each other openly.

( ततः प्रविशति कामयमानावस्थो राजा । )

**राजा**—( निःश्वस्य )

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।
अलमस्मि ततो हृदयं तथापि नेदं निवर्तयितुम् ॥ २ ॥

( मदनबाधां निरूपयन् ) भगवन्कुसुमायुध, त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसंधीयते कामिजनसार्थः । कुतः ?

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥ ३ ॥

( सखेदं परिक्रम्य ) क्व नु खलु संस्थिते कर्मणि सदस्यैरनुज्ञातः श्रमक्लान्तमात्मानं विनोदयामि ? ( निःश्वस्य ) किं नु खलु मे प्रियादर्शनादृते शरणमन्यत् ? यावदेनामान्विष्यामि । ( सूर्यमवलोक्य ) इमामुग्रातपवेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति । तत्रैव तावद्गच्छामि । ( परिक्रम्य स्पर्शसुखं रूपयित्वा ) अहो प्रवातसुभगोऽयमुद्देशः ।

शक्यमरविन्दसुरभिः कणवाही मालिनीतरंगाणाम् ।
अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः ॥ ४ ॥

( परिक्रम्यावलोक्य च ) अस्मिन्वेतसपरिक्षिप्ते लतामण्डपे संनिहितया भवितव्यम् । तथा हि—( अधो विलोक्य )

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ ५ ॥

यावद्विटपान्तरेणावलोकयामि । ( परिक्रम्य, तथा कृत्वा सहर्षम् ) अये, लब्धं नेत्रनिर्वाणम् । एषा मे मनोरथप्रियतमा सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामन्वास्यते । भवतु । श्रोष्याम्यासां विस्रम्भकथितानि । ( इति विलोकयन्स्थितः । )

( ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला । )

**सख्यौ**—( उपवीज्य सस्नेहम् ) हला शकुन्तले, अपि सुखयति ते नलिनीपत्रवातः ?

**शकुन्तला**—किं वीजयतो मां सख्यौ ?

**राजा**—बलवदस्वस्थशरीरा शकुन्तला दृश्यते । ( सवितर्कम् ) तत्किमयमातपदोषः स्यात्, उत यथा मे मनसि वर्तते ? ( साभिलाषं निर्वर्ण्य ) अथवा कृतं संदेहेन ।

स्तनन्यस्तोशीरं शिथिलितमृणालैकवलयं
  प्रियायाः साबाधं किमपि कमनीयं वपुरिदम् ।
समस्तापः कामं मनसिजनिदाघप्रसरयो-
  र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ ६ ॥

**प्रियंवदा**—( जनान्तिकम् ) अनसूये तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला । किं नु खलु तस्यास्तन्निमित्तोऽयमातङ्को भवेत् ?

**अनसूया**—सखि, ममापीदृश्याशङ्का हृदयस्य । भवतु । प्रक्ष्यामि तावदेनाम् । सखि, प्रष्टव्यासि किमपि । बलवान्खलु ते संतापः ।

**शकुन्तला**—( पूर्वार्धेन शयनादुत्थाय ) हला, किं वक्तुकामासि ?

**अनसूया**—हला शकुन्तले, अनभ्यन्तरे खल्वावां मदनगतस्य वृत्तान्तस्य । किंतु यादृशीतिहासनिबन्धेषु कामयमानानामवस्था श्रूयते, तादृशीं तव पश्यामि । कथय किंनिमित्तं ते संतापः । विकारं खलु परमार्थतोऽज्ञात्वानारम्भः प्रतीकारस्य ।

**राजा**—अनसूयामप्यनुगतो मदीयस्तर्कः । नहि स्वाभिप्रायेण मे दर्शनम् ।

**शकुन्तला**—( आत्मगतम् ) बलवान्खलु मेऽभिनिवेशः । इदानीमपि सहसैतयोर्न शक्नोमि निवेदयितुम् ।

**प्रियंवदा**—सखि शकुन्तले, सुष्ठ्वेषा भणति । किमात्मन आतङ्कमुपेक्षसे ? अनुदिवसं खलु परिहीयसेऽङ्गैः । केवलं लावण्यमयी छाया त्वां न मुञ्चति ।

**राजा**—अवितथमाह प्रियंवदा । तथा हि—

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥ ७ ॥

**शकुन्तला**—सखि, कस्य वान्यस्य कथयिष्यामि ? आयासयित्रीदानीं वां भविष्यामि ।

**उभे**—अत एव खलु निर्बन्धः । स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति ।

**राजा**—

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रान्तरे श्रवणकातरतां गतोऽस्मि ॥ ८ ॥

**शकुन्तला**—सखि, यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिः, तत आरभ्य तद्गतेनाभिलाषेणैतदवस्थास्मि संवृत्ता ।

**राजा**—( सहर्षम् ) श्रुतं श्रोतव्यम् ।

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवार्धश्यामस्तपात्यये जीवलोकस्य ॥ ९ ॥

**शकुन्तला**—तद्यदि वामनुमतं तदा तथा वर्तेथां यथा तस्य राजर्षेरनुकम्पनीया भवामि । अन्यथावश्यं सिञ्चतं मे तिलोदकम् ।

**राजा**—संशयच्छेदि वचनम् ।

**प्रियंवदा**—( जनान्तिकम् ) अनसूये, दूरगतमन्मथाक्षमेयं कालहरणस्य । यस्मिन्बद्धभावैषा स ललामभूतः पौरवाणाम् । तद्युक्तमस्या अभिलाषोऽभिनन्दितुम् ।

**अनसूया**—तथा, यथा भणसि ।

**प्रियंवदा**—( प्रकाशम् ) सखि, दिष्ट्यानुरूपस्तेऽभिनिवेशः । क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते ?

**राजा**—किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेते ।

**अनसूया**—कः पुनरुपायो भवेद्येनाविलम्बितं निभृतं च सख्या मनोरथं संपादयावः ?

**प्रियंवदा**—निभृतमिति चिन्तनीयं भवेत् । शीघ्रमिति सुकरम् ।

**अनसूया**—कथमिव ?

**प्रियंवदा**—ननु स राजर्षिरेतस्यां स्निग्धदृष्ट्या सूचिताभिलाष एतान्दिवसान्प्रजागरकृशो लक्ष्यते ।

**राजा**—सत्यमित्थंभूत एवास्मि । तथाहि—

इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं
निशि निशि भुजन्यस्तापाङ्गप्रसारिभिरश्रुभिः ।
अनभिलुलितज्याघाताङ्कं मुहुर्मणिबन्धना-
त्कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ १० ॥

**प्रियंवदा**—( विचिन्त्य ) हला, मदनलेखोऽस्य क्रियताम् । इमं देवप्रसादस्यापदेशेन सुमनोगोपितं कृत्वा तस्य हस्तं प्रापयिष्यामि ।

**अनसूया**—रोचते मे सुकुमारोऽयं प्रयोगः । किं वा शकुन्तला भणति ?

**शकुन्तला**—को नियोगो विकल्प्यते ?

**प्रियंवदा**—तेन ह्यात्मन उपन्यासपूर्वं चिन्तय तावल्ललितपद-बन्धनम् ।

**शकुन्तला**—हला, चिन्तयाम्यहम् । अवधीरणाभीरु पुनर्वेपते मे हृदयम् ।

**राजा**—( सहर्षम् )

> अयं स ते तिष्ठति संगमोत्सुको
> विशङ्कसे भीरु यतोऽवधीरणाम् ।
> लभेत वा प्रार्थयिता न वा श्रियं
> श्रिया दुरापः कथमीप्सितो भवेत् ॥ ११ ॥

**सख्यौ**—आत्मगुणावमानिनि, क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति ?

**शकुन्तला**—( सस्मितम् ) नियोजितेदानीमस्मि । ( इत्युपविष्टा चिन्तयति । )

**राजा**—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि। यतः,

> उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
> कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥ १२ ॥

**शकुन्तला**—हला, चिन्तितं मया गीतवस्तु । न खलु संनिहितानि पुनर्लेखनसाधनानि ।

**प्रियंवदा**—एतस्मिञ्छुकोदरसुकुमारे नलिनीपत्रे नखैर्निक्षिप्तवर्णं कुरु ।

**शकुन्तला**—( यथोक्तं रूपयित्वा ) हला, शृणुतमिदानीं संगतार्थं न वेति ।

**उभे**—अवहिते स्वः ।

**शकुन्तला**—( वाचयति )

तव न जाने हृदयं मम पुनः कामो दिवापि रात्रावपि ।
निर्घृण तपति बलीयस्त्वयि वृत्तमनोरथान्यङ्गानि ॥ १३ ॥

**राजा**—( सहसोपसृत्य )

तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥ १४ ॥

**सख्यौ**—( सहर्षम् ) स्वागतमविलम्बिनो मनोरथस्य ।

( शकुन्तलाभ्युत्थातुमिच्छति । )

**राजा**—अलमलमायासेन ।

संदष्टकुसुमशयनान्याशुक्लान्तबिसभङ्गसुरभीणि ।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ १५ ॥

**अनसूया**—इतः शिलातलैकदेशमलंकरोतु वयस्यः ।

( राजोपविशति । शकुन्तला सलज्जा तिष्ठति । )

**प्रियंवदा**—द्वयोर्नतु युवयोरन्योन्यानुरागः प्रत्यक्षः । सखी-स्नेहो मां पुनरुक्तवादिनीं करोति ।

**राजा**—भद्रे, नैतत्परिहार्यम् । विवक्षितं ह्यनुक्तमनुतापं जनयति ।

**प्रियंवदा**—आपन्नस्य विषयनिवासिनो जनस्यार्तिहरेण राज्ञा भवितव्यमित्येव युष्माकं धर्मः ।

**राजा**—नास्मात्परम् ।

**प्रियंवदा**—तेन हीयमावयोः प्रियसखी त्वामुद्दिश्येदमवस्थान्तरं भगवता मदनेनारोपिता । तदर्हस्यभ्युपपत्त्या जीवितमस्या अवलम्बितुम् ।

**राजा**—भद्रे, साधारणोऽयं प्रणयः, सर्वथानुगृहीतोऽस्मि ।

**शकुन्तला**—( प्रियंवदामवलोक्य ) हला, किमन्तःपुरविरह-पर्युत्सुकस्य राजर्षेरुपरोधेन ।

**राजा**—

इदमनन्यपरायणमन्यथा
हृदयसंनिहिते हृदयं मम ।
यदि समर्थयसे मदिरेक्षणे
मदनबाणहतोऽस्मि हतः पुनः ॥ १६ ॥

**अनसूया**—वयस्य, बहुवल्लभा राजानः श्रूयन्ते । यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति, तथा निर्वर्तय ।

**राजा**—भद्रे, किं बहुना ?

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।
समुद्ररशना चोर्वी सखी च युवयोरियम् ॥ १७ ॥

**उभे**—निर्वृते स्वः ।

**प्रियंवदा**—( सदृष्टिक्षेपम् ) अनसूये, यथैष इतो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति । एहि । संयोजयाव एनम् । ( इत्युभे प्रस्थिते । )

**शकुन्तला**—हला, अशरणास्मि । अन्यतरा युवयोर्गच्छतु ।

**उभे**—पृथिव्या यः शरणं स तव समीपे वर्तते । (इति निष्क्रान्ते ।)

**शकुन्तला**—कथं गते एव ।

**राजा**—अलमावेगेन । नन्वयमाराधयिता जनस्तव समीपे वर्तते ।

किं शीतलैः क्लमविनोदिभिरार्द्रवातान्
संचारयामि नलिनीदलतालवृन्तैः ।
अङ्के निधाय करभोरु यथासुखं ते
संवाहयामि चरणावुत पद्मताम्रौ ॥ १८ ॥

**शकुन्तला**—न माननीयेष्वात्मानमपराधयिष्ये । ( इत्युत्थाय गन्तुमिच्छति । )

**राजा**—सुन्दरि, अनिर्वाणो दिवसः । इयं च ते शरीरावस्था ।

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणम् ।
कथमातपे गमिष्यसि परिबाधापेलवैरङ्गैः ॥ १९ ॥

( इति बलादेनां निवर्तयति । )

**शकुन्तला**—पौरव, रक्ष विनयम् । मदनसंतप्तापि न खल्वात्मनः प्रभवामि ।

**राजा**—भीरु, अलं गुरुजनभयेन । दृष्ट्वा ते विदितधर्मा तत्रभवान्नात्र दोषं ग्रहीष्यति कुलपतिः । यतः,

गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥ २० ॥

**शकुन्तला**—मुञ्च तावन्माम् । भूयोपि सखीजनमनुमानयिष्ये ।

**राजा**—भवतु । मोक्ष्यामि ।

**शकुन्तला**—कदा ?

**राजा**—

अपरिक्षतकोमलस्य याव-
त्कुसुमस्येव नवस्य षट्पदेन ।
अधरस्य पिपासता मया ते
सदयं सुन्दरि गृह्यते रसोऽस्य ॥ २१ ॥

( इति मुखमस्याः समुन्नमयितुमिच्छति । शकुन्तला परिहरति नाट्येन । )

—शाकुन्तले तृतीयोऽङ्कः ।

---

Shakuntala receiving the blessings and advice of her elders and friends at the hermitage of Kashyapa, at the time of her departure for her husband's house.

( ततः प्रविशति यथोद्दिष्टव्यापारासनस्था शकुन्तला । )

**तापसीनामन्यतमा**—( शकुन्तलां प्रति ) जाते, भर्तुर्बहुमान-सूचकं महादेवीशब्दं लभस्व ।

**द्वितीया**—वत्से, वीरप्रसविनी भव ।

**तृतीया**—वत्से, भर्तुर्बहुमता भव ।

( इत्याशिषो दत्त्वा गौतमीवर्जं निष्क्रान्ताः । )

**सख्यौ**—( उपसृत्य ) सखि, सुखमज्जनं ते भवतु ।

**शकुन्तला**—स्वागतं मे सख्योः । इतो निषीदतम् ।

**उभे**—( मङ्गलपात्राण्यादाय उपविश्य ) हला सज्जा भव । याव-न्मङ्गलसमालम्भनं विरचयावः ।

**शकुन्तला**—इदमपि बहु मन्तव्यम् । दुर्लभमिदानीं मे सखी-मण्डनं भविष्यति । ( इति बाष्पं विसृजति । )

**उभे**—सखि, उचितं न ते मङ्गलकाले रोदितुम् । ( इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः । )

**प्रियंवदा**—आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते ।

( प्रविश्योपायनहस्तौ । )

**ऋषिकुमारकौ**—इदमलंकरणम् । अलंक्रियतामत्रभवती ।

( सर्वा विलोक्य विस्मिताः । )

**गौतमी**—वत्स नारद, कुत एतत् ?

**प्रथमः**—तातकाश्यपप्रभावात् ।

**गौतमी**—किं मानसी सिद्धिः ?

**द्वितीयः**—न खलु । श्रूयताम् । तत्रभवता वयमाज्ञप्ताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति । तत इदानीं—

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः ॥ ४ ॥

**प्रियंवदा**—( शकुन्तलां विलोक्य ) हला, अनयाभ्युपपत्त्या सूचिता ते भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीरिति ।

( शकुन्तला व्रीडां रूपयति । )

**प्रथमः**—गौतम, एह्येहि । अभिषेकोत्तीर्णाय काश्यपाय वनस्पतिसेवां निवेदयावः ।

**द्वितीयः**—तथा ।

( इति निष्क्रान्तौ । )

**सख्यौ**—अये, अनुपयुक्तभूषणोऽयं जनः चित्रकर्मपरिचयेनाङ्गेषु त आभरणविनियोगं करोति ।

**शकुन्तला**—जाने वां नैपुण्यम् ।

( उभे नाट्येनालंकुरुतः । )

( ततः प्रविशति स्नानोत्तीर्णः काश्यपः । )

**काश्यपः**—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ ५ ॥

( इति परिक्रामति । )

**सख्यौ**—हला शकुन्तले, अवसितमण्डनासि । परिधत्स्व सांप्रतं क्षौमयुगुलम् ।

( शकुन्तलोत्थाय परिधत्ते । )

**गौतमी**—जाते, एष त आनन्दपरिवाहिणा चक्षुषा परिष्वजमान इव गुरुरुपस्थितः । आचारं तावत्प्रतिपद्यस्व ।

**शकुन्तला**—( सव्रीडम् ) तात, वन्दे ।

**काश्यपः**—वत्से,

यथातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ ६ ॥

**गौतमी**—भगवन्, वरः खल्वेषः, नाशीः ।

**काश्यपः**—वत्से, इतः सद्योहुताग्नीन्प्रदक्षिणीकुरुष्व ।

( सर्वे परिक्रामन्ति । )

**काश्यपः**—( ऋक्छन्दसाशास्ते । )

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैतानास्त्वां वह्नयः पावयन्तु ॥ ७ ॥

प्रतिष्ठस्वेदानीम् । ( सदृष्टिक्षेपम् ) क्व ते शार्ङ्गरवमिश्राः ।

( प्रविश्य )

**शिष्याः**—भगवन्, इमे स्मः ।

**काश्यपः**—भगिन्यास्ते मार्गमादेशय ।

**शार्ङ्गरवः**—इत इतो भवती ।

